# पताका

## (बालोपन्यासः)



विद्वन्मणिः

डा० केशवचन्द्रदाशः

भाषाप्रचारसमितिः, पुरी ।

# पताका

(बालोपन्यासः)



विद्वन्मणिः

डा० केशवचन्द्रदाशः

लोकभाषाप्रचारसमितिः, पुरी ।

पताका

(बालोपन्यासः)

प्रणेता —
विद्वन्मणिः
डा०. केशवचन्द्रदाशः
प्राध्यापकः —
श्रीजगन्नाथसंस्कृतविश्वविद्यालयः
श्रीविहारः, पुरी 752002

प्रकाशिका —
लोकभाषाप्रचारसमितिः
शरधाबालि, पुरी-752002



प्रथमसंस्करणम्
1990

मुद्रकः
अशोकन् पुरनाट्टुकरा
"भारतमुद्रा", त्रि र, केरलम् ।

मूल्यम् — रु 5/-

इदमद्य मया लब्धम्

इदं प्राप्स्ये मनोरथम्...।

# निजकथा

बालसाहित्यस्य परिसरः अल्पः । संस्कृते अल्पतरोऽपि अस्य परिधिः । तथापि समसामयिकसाहित्यधारातो न विच्छिन्नं संस्कृतम् । बालकथा - बालगीति - बालोपन्यास - प्रभृतयो रचना अधुनाऽपि संस्कृतस्य साहित्यविशेषाः ।

सीमी - जितेन्द्रयोः कैशोरकथा अत्र पताका । देशस्य स्वातन्त्र्यमिह पृष्ठभूमिः । सहयोगः अन्तःस्वरः । मैत्री च सन्देशः । पताका न वसनखण्डस्य परिचयः, अपितु अनया वस्तुविशेषस्य उपस्थापनं भवति । उपस्थापनमिह निरूपणम् । निरूपणं च कस्यचित् मार्गस्य · · ·

1985 तमे वर्षे अस्य बालोपन्यासस्य "भारतमुद्रा" (केरलस्य) पत्रिकायां प्रथमप्रकाशनम् अभवत् । एतदर्थं "भारतमुद्रा"- संपादकस्य अशोकन् पुरनाट्टुकरा-महोदयस्य समीपे कृतज्ञतां प्रकटयामि ।

संप्रति लोकभाषाप्रचारसमितिः अस्य बालोपन्यासस्य प्रकाशनं करोति इति हर्षस्य विषयः ।

डा०. केशवचन्द्रदाशः

# पताका

आकाशः निर्मलः। दिशा उज्ज्वला। वृष्टिः शान्ता। पवनः मन्दः। प्रकाशः अरुणिमः। पक्षिकुलः काकलिमुखरः। रजनी प्रभाति।

समयः पञ्चवादनम्। मनः प्रफुल्लम्। एकतः जयगानम्। अन्यत्र शंखध्वनिः। कुत्र च तोपध्वनिः। कुत्र च समूहसंगीतम्। एवं प्रातः कोलाहलमयम्।

सर्वत्र अद्य उत्सवः। अतः सर्वेषाम् आनन्दः! सर्वे गच्छन्ति। बालकाः विद्यालयम्। गुरुजनाः कार्यालयम्। अद्य सर्वेषाम् एकः समयः। सर्वेषां सुवेशः! अद्य अगस्त पञ्चदश।

सूर्यः उदितः।

जितेन्द्रः आगतः। सीमीगृहं च प्राप्तः।

द्वारे सम्बोधितवान्।

– सीमि ........! सीमि............!

सीमीमाता गृहतः अवदत्।

– सीमि ! ध्वजा अधुना पुष्पिता। ततः ध्वजबन्धनं संजातम्।
"जनगणमन" इति संगीतं सस्वरं सर्वेषां मुखे झङ्कृतम्। तदनु जयध्वनिः। जन्मभूमेः जयध्वनिः। जातिजनकस्य जयध्वनिः। जननायकस्य जयध्वनिः। ततः मातुः वन्दना। वीराणां वन्दना। ततः सभक्तिप्रणतिः। परस्परं नमोनमः। परस्परं सुप्रभातम्। अनन्तरं मिष्टान्नवितरणम्। पुनः सानन्दं कोलाहलः।

सभा भवति।
सीमीं धृत्वा जितेन्द्रः सभागृहं प्रविष्टः। एकपार्श्वे च उपविष्टः। सीमी कातरभावेन अपृच्छत्।
– जितेन...........। पुनः किमर्थं नीरवता?
- सभा प्रचलति। अतिथिः समागतः। तस्य भाषणं भविष्यति।
– कस्मिन् विषये?
– पताकाविषये।

सभा अनुष्ठिता। गुरुजनेभ्यः अतिथिभ्यश्च पुष्पमाला समर्पिता। अतिथिः दण्डायमानः अभवत्। भाषणं प्रारब्धम्।

"श्रद्धेयाः अन्तेवासिनः। अद्य पुण्यदिवसः। अस्मिन् दिवसे वयं मुक्ताः। दिवसेऽस्मिन् च अस्माकं मुक्तिसमरः समाप्तः। मुक्तिसमरस्य प्रतीकम् इयं पताका। पताकातले सर्वे वयं समानाः। सर्वे आत्मीयाः। पताकायाः मर्यादा अस्माकं सर्वस्वम्।

श्रूयताम् – बहूनि दिनानि गतानि। एकदा अस्माकं प्राचीन-आचार्यः किं कृतवान् आसीत्, ज्ञायते? सः प्रातः जागर्ति स्म। जागरेण तस्य प्रथमप्रार्थना आसीत् –

"सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः
सर्वे भद्राणि पश्यन्तु मा कश्चित् दुःखभाक् भवेत्॥"

ततः सः स्नानाय पुष्करिणीं गच्छति। तत्र स्मरति। इयं सप्तसिन्धुदेशं स्मरति। देशेऽस्मिन् प्रमुखाः सप्तनद्यः सन्ति। गङ्गा, यमुना, नर्मदा, गोदावरी, कावेरी प्रभृतयः। आसां प्रवाहे देशोऽयम् उर्वरः। स्वर्णप्रसूः अपि। अतः सः ताम्रपात्रीं धृत्वा आसामेव

आवाहनं करोति। अखण्डभारतं च पूजयति। सर्वे भारतीया आत्मीया इति चिन्तयन्ति।

यूयं सर्वे भविष्यद् वंशधराः। अस्य देशस्य उत्तरदायित्वं युष्माकम्। अद्य संकल्पदिवसः। अद्य च प्रतिज्ञादिवसः। अद्य एव सर्वात्मना प्रगतिनिमित्तं संकल्पः कर्तव्यः। यत्नोऽपि कर्तव्यः।

अन्ततः यूयं गौरवस्य अधिकारिणः भवथ इति आशीः, उपदेशोऽपि।

सभा उद्यापिता। सर्वे गृहं प्रत्यागताः। जितेन्द्रः सीमाँ गृहे प्रापितवान्। निजगृहं च प्राप्तः। सहसा सः अपश्यत्—अलिन्दे वृत्तपत्रं पतितम्। तत्रापि सुन्दरपताका शोभते। सः कौतूहली संजातः।

— किमर्थं पताका ? मन्दिरे पताका, आश्रमे पताका, संघस्य पताका, न्यायालयस्य पताका, व्योमयानस्य पताका, जलयाने च पताका, रेलस्थानेऽपि पताका, अद्य पुनः वृत्तपत्रे च पताका। यत्र पताका ते किं स्वाधीनाः ? ........ स्वतन्त्राः ?

जितेन्द्रः पितरम् अपृच्छत्।

— पितः ! यत्र पताका तत्र स्वाधीनता ?

— नहि, जितेन्.......! स्थलविशेषेषु पताकाः भिन्नाः भवन्ति।

— किं सर्वे स्वतन्त्राः ?

— नहि। पताकायां विभिन्ननिर्देशो वर्तते, यथा न्यायालये सर्वदा अस्माकं राष्ट्रिय-पताका उड्डीयते। किन्तु यदा मृत्युदण्डविधानं भवति तदा कृष्णपताका उड्डीयते। एवम् अन्यत्र नानानिर्देशाः सन्ति। पताका तु प्रतीकमात्रम्।

कृष्णपताका अशुभस्य। रक्तपताका विपदः। हरितपताका आरम्भस्य......... गतिशीलस्य च। इत्थं सर्वत्र।

अपराह्णम् अवनतम्। सायं कालः। सर्वत्र प्रदीपः प्रज्वलितः। अद्य तु सन्ध्या भिन्ना। चतुःपार्श्वे प्रदीपानाम् आडम्बरम्। नाना वर्णाली। अपूर्वा शोभा। विभिन्ना वाद्यरीतिः। पृथक् पृथक् च गीतिर्विचित्रा।

स्वाधीनतायाः उत्तरार्धं परिपालयन्ति जनाः।

निकादयः पाषाणाः? एते संग्रामप्रियाः। अतः समरभूमौ अवतीर्णाः। संग्रामाय विप्लविनः सञ्जाताः। रुधिरेषु स्नानं कृतवन्तः। दुर्दशां निजीकृतवन्तः। दुःखमात्मसात्कृतवन्तः। अन्ततः देशाय प्राणबलिमपि स्वीकृतवन्तः।

एतेषाम् अनुभूतिः अस्माकम् इतिहासः। एतेषां त्यागः अस्माकम् आदर्शः। एतेषाम् आचरणम् अस्माकं पूज्यपरंपरा।

अद्य संस्मरणतिथिः। अतः आवश्यकं मनाक् मननम्। मनाक् ध्यानम्। मनाक् प्रणिधानम्। अद्य सदेशः सकृत् शपथः – देशाय, मानवजातये, आत्मनः उन्नतये च। एतदर्थम् अद्य नाटकं "किमर्थं पाषाणः" इति मञ्चस्थम्।

उद्घोषणा समाप्ता।

सूत्रधारः विज्ञापितवान्।

– भवत्सकाशम् अद्य प्रतिमा अनुभूतिं कथयिष्यति।

प्रथमप्रतिमा पुरःसृता।

सहर्षम् अकथयत्।

अहं सैनिकः। देशस्य दासः। जनजीवनरक्षी। अनुशासनस्य परिपोषकः। निरापत्ता मे व्रतम्। जागरणं च धर्मः।

एकदा बहिःशासकानां अत्याचारः देशेऽस्मिन् प्रबलः संजातः। जनाः निष्पीडिताः। सर्वत्र आतङ्कः व्याप्तः। अस्मासु विभेदः सृष्टः। अतः सोदरः शत्रुः संजातः। एकात्मभावना नष्टा। समाजः विखण्डितः। एतदर्थं कुत्रापि विरुद्धस्वरः न श्रुतः। सर्वे दासानुदासाः अभवन्।

दशा इयं मम हृदयं व्यदारयत्। अहं विप्लवी अभवम्। बहवः बन्धवः मम सहयोगिनः संजाताः। विप्लवः प्रारब्धः। शत्रवः त्रस्ताः। विदेशी शासकः भीतः। सफलता प्रथमवारं निकटवर्तिनी अभवत्। देशमातृका नाम्ना पताका उत्तोलिता।

परं सर्वं विफलम् अभवत्। बन्धवः कति मृताः। अहं बन्दी संजातः। तथापि वश्यता न स्वीकृता। पराधीनता तिरस्कृता।

अनन्तरं विफलतायाः कारणम् अन्विष्टम्। अनुभूतं च – विफलतायाः कारणं विश्वासघातः, लोलुपता, स्वार्थपरता इति।

# पताका केशवचन्द्रदासस्य नोवला अनुवर्तते

तदनु..................................।

एवं वर्णयन् सैनिकः पूर्ववत् पाषाणः संजातः। ततः द्वितीया प्रतिमा सम्मुखम् आगता। सा अवर्णयत्।

"तथापि वह्निः न शीतलीभूतः। समयः विगलितः। संयतः अत्याचारः पुनः वर्धितः। कति निर्दिष्टक्षणेषु पुनः सर्वत्र तमसा समाच्छन्ना। स्वतन्त्रचिन्ता अपसृता। परंपरा विस्मृता। महिषा इव जना पराधीनपल्वले स्नानम् अभ्यस्तवन्तः।

एतत् सर्वम् असह्यम् अभवत्। अतः अहं प्रतिक्रियाशीलः संजातः। उद्धाराय च चिन्ता मया कृता। किंतु अनुभूतम् - अत्र मे चिन्ता फलवती न भविष्यति। तथापि, केन प्रकारेण जन्मभूमेः मुक्तिः भविष्यति इति भावना मनसि तीव्रा अभवत्।

अतः देशान्तरे बन्धुता विहिता। तत्र च स्थित्वा उपायः चिन्तितः। विना रक्तपातं स्वाधीनता निष्फला। विना विवादं समाधानम् असम्भवम्। विना युद्धं शान्तिः अस्पृश्या।

एतन्निमित्तं सैन्यवाहिनी निर्मिता। बहवः देशसेविनः उद्बुद्धाः। अनेके सैनिकाः च संजाताः। राजधानीम् आक्रान्तुं संकल्पः कृतः। सर्वत्र आह्वानं प्रसारितम्। किंतु अस्माकं इयं नीतिः शान्तिकामिनां रुचिकरी नासीत्।

फलतः अहिंसामार्गः स्वतन्त्रतानिमित्तं प्रधानपथः निश्चितः। सत्याग्रहः अस्त्ररूपेण स्वीकृतः। अनशनं च नैतिकबलरूपेण अङ्गीकृतम्। अतः संघटनं समारब्धम्। सभा आकारिता। किंतु सभायां निरीहवन्यपशुरिव सकलजनः शत्रुभिः घातितः। निरीहरक्तेषु सभास्थानं रञ्जितम्। अहो, हृदयविदारकम् इदं दृश्यम्! तथापि क्षमा............तथापि दया...........।

परं मम बन्धुः रक्तमुखः संजातः। प्रतिशोधाय उन्मत्तः अभवत्। यन्निर्देशात् गणहत्या घटिता तं सः एकदा घातितवान्। ततः................।

एतावद् उक्त्वा युवकः पाषाणः संजातः। दर्शकगोष्ठीतः सूत्र-

नाटकं समाप्तम्। कोलाहलप्रिया विद्यार्थिनः गृहाय उन्मुखाः। समयेऽस्मिन् विद्युत्प्रदीपाः निर्वापिताः। सर्वे इतस्ततः अभवन्। अनेके निर्दिष्टमार्गं विस्मृतवन्तः। कोलाहलेषु सीमी अपि कुत्र परिभ्रष्टा। जितेन्द्रः आन्विष्यन् केवलं सम्बोधयति।

- सीमि........! सीमि........! सीमि........!

पुनः प्रदीपः प्रज्वलितः। जितेन्द्रः सीमीम् अन्विष्टवान्। किंतु किमपि संधानं न प्राप्तवान्। अन्ततः नितरां पर्याकुलः संजातः। सहसा कश्चित् शब्दायितवान्।

- अरे........रे........! आगच्छ....। पश्य........। कूपे कश्चित् पतितः। शब्दः श्रूयते।

आगच्छ........त्वरम्........आगच्छ....

सर्वे कूपनिकटे सम्मिलिताः। कूपतः सीमी शब्दापयति– जितेन्........जितेन्........इति। जितेन्द्रः सपदि कूपं प्लुतुमुद्यतः। शिक्षकाः भीताः। ते सभयम् अवदन्।

- अरे, जितेन्........! मा याहि।

जितेन्द्रः तु कस्यापि वचनं न शृणोति। कूपं पुप्लुवे। एतत् दृष्ट्वा कश्चन शिक्षकः उभयम् उद्धर्तुं कूपं प्रविष्टः। सर्वे अधुना भीतिकातराः। भगवन्तं च प्रार्थयन्ति।

- भगवान्....... ! उद्धरतु एतान्। उद्धरतु......

बहुकष्टेन सर्वे कूपस्य उपरि आगताः। एतेषु सीमी अधिकतरं व्रणिता। देहे च तस्याः क्षतस्थानानि अधिकानि। रुधिरं निर्झरति। समग्रशरीरं क्लिन्नम्। सा मूर्च्छिता।

सीमि चिकित्सालयं प्रापिता। बहुसमयानन्तरं सा चेतनां लब्धवती। चिकित्सकः अवदत्। – रक्तक्षयेन सा अत्यन्तं दुर्बला। अधुना तदर्थं रक्तम् अपेक्षते। युष्मासु कः रक्तं दातुं शक्नोति?

जितेन्द्रः तत्क्षणं रक्तदानाय निरीक्षागृहं प्रविष्टः।

रक्तनिरीक्षा अभवत्। परं तस्य रक्तश्रेणी भिन्ना निरीक्षिता। अतः चिकित्सकः तं निषिद्धवान्।

जितेन्द्रः विचलितः। कोऽपि उपायः मानसं नागतः। सहसा तस्य बुद्धिः स्फुरिता। मनसि उपस्थिता एका घटना। तस्य माता एकदा पीडिता आसीत्। तदानीं तस्याः रुधिरनिरीक्षा संजाता। तस्याः रक्तश्रेणी सीमीरुधिरेण सह मिलिष्यति इति-निश्चित्य जितेन्द्रः गृहम् अभिधावितवान्।

मातुः समीपे सः सर्वं निवेदितवान्। माता यदा भावविगलिता अभवत् तदा जितेन्द्रः ताम् अनुरुद्धवान्।

– मातः! अधुना तु रक्तम् आवश्यकम्। तव रक्तश्रेणी च समाना। त्वमेव रक्तं दातुं शक्नोषि। इदानीं मया सह आगच्छ।

जितेन्द्रः तस्य जननी च चिकित्सालयं गच्छतः। मार्गे जितेन्द्रः नानाविधं जल्पति। सीमी कदा स्वस्था भविष्यति? कदा वा रुग्णालयतः प्रत्यागमिष्यति। एवं बहुविधं वचनं तस्य मुखे। जननी तु नीरवतया शृणोति!

चिकित्सालयस्य निकटे यानं स्थापितम्। जितेन्द्रः अग्रेसरः। माता तम् अनुसृत्य सीमीम् उपगता। ततः चिकित्सकः सर्वं व्यवस्थापितवान्। जननी रक्तं दत्तवती।

कियत्समयानन्तरं सीमी मनाक् स्वस्था अभवत्। चिकित्सकः आश्वसितवान्।

– अधुना न कोऽपि असुविधा। भवन्तः गच्छन्तु। सा विश्राम्यतु। जितेन्द्रः गृहं प्रत्यागतः।

समस्त नैशकर्म समाप्तम्। रात्रिः दशोत्तरा। जितेन्द्रः शय्याम् अधिश्रितः। परं निद्रा नागच्छति। चिन्तायां भासते तद्दिननाटकस्य यवनिका। तत्र च भारतमानचित्रम्। तस्मिन् च भारतमातुः चित्रम्। अद्य सः अनुभवति - भारतमातुः स्थाने सीमी दण्डायमाना। तथैव विभूषिता। परं तस्याः नयनं नास्ति।

अहो दुःखम् ? को वा दृष्टिं प्रदास्यति ? तस्याः अग्रे तु केवलम् अन्धकारम्। को वा अन्धकारं दूरीकर्तुं शक्नोति ? तस्याः सर्वाङ्गे अद्य केवलं यन्त्रणा। को वा अपनेतुं प्रभवति ? जितेन्द्रस्य कण्ठः रुद्धः अभवत्। नयनकोणतः अश्रु विगलितम्। तन्द्रालुनेत्रे तस्य निद्रा समागता।

पक्षिरावः श्रुतः। तमः अपगतम्। प्रातः अभवत्। जितेन्द्रः नित्यकर्म समाप्य चिकित्सालयम् आगतः। अपश्यत्, सीमी तथापि सुप्ता। सः फलानि शय्यायाः एकपार्श्वे स्थापितवान्। शनैः च आकारितवान्।

– सीमी........! सीमी........!

निकटे उपविष्टा सीमीमाता अवदत्।

– स्पृशन् सम्बोधय।

जितेन्द्रः सम्बोधितवान्।

– सीमि! त्वदर्थं फलम् आनीतम्। उत्तिष्ठ....मुखं प्रक्षालय।

जितेन्द्रस्य स्पर्शं स्वरं च श्रुत्वा सा तत्क्षणम् अवदत्।

– जितेन्........!

– हुँ, सीमी........! किम् अनुभवसि ?

– स्वस्था अस्मि।

सीमी उत्थिता। माता तस्याः मुखं परिष्कृतवती।

फलं च सज्जीकृत्य दत्तवती।

– नय, जितेन्....! त्वं किंचित् खाद। सा अपि खादतु। परस्परम् आलप्यताम्।

अहं बहिः आगच्छामि।

सहर्षं उभौ खादतः। जितेन्द्रः आरभत।

– सीमि........! तव ईदृशी दशा संजाता ? एतत् सर्वं मम कल्पनायां नासीत्।

– जितेन्........! भवितव्यं नूनं भवति। मम तु दुःसमयः। तव का त्रुटिः ?

किमर्थं दुःखायसे ?

– नहि, सीमि ........! मम अत्र दोषः। यदा नाटकं समाप्तं तदा त्वं मन्निकटे उपविष्टा इति विस्मृतं मया। तदानीं च आलोकः निर्वापितः। अतः अहं उत्थाय किंचित् पुरः आगतः।

– तदा तु जितेन्........जितेन्........इति मया संबोधितम्।

– कोलाहले किमपि न श्रुतम्।........सीमी! तदैव त्वम् इतस्ततः संजाता।

– हुँ, तदा एव।

– वस्तुतः त्रुटिः मम। क्षमस्व मां, सीमि ....!

– नहि, जितेन्........! एवं मा वद।

– किन्तु, सीमि........! मया एकः उपायः चिन्तितः।

– किम् ?

– किं त्वम् इत्थं सदा अन्धकारे स्थास्यसि ?

– अन्यथा किं करिष्यामि ?

– अहं तु एकदा चिकित्सकः भविष्यामि। बहूपार्जनं करिष्यामि। संचितधनेन निजचिकित्साद्वारा च नूतननयनं ते प्रदास्यामि। तव अन्धकारं दूरीकरिष्यामि। अल्पं विहस्य सीमी अवदत्।

– जितेन्........! किं विदूषक इव वदसि ?

– नहि, सत्यं वदामि। तव देहस्पर्शं कृत्वा शपथं करोमि। सीमी निरुत्तरा। जितेन्द्रः तथापि भावप्रवणः।

– तद्दिने नाटके श्रुतं नु देशसेविनां वचनम् ?

– श्रुतम्। परं ते देशसेविनः।

– अहमपि देशसेवी भविष्यामि।

– केन प्रकारेण ?

– चिकित्सा अपि देशसेवा। अनया जनाः उपकारं लभन्ते। किंतु पश्य, समयः परिवर्तितः। तदानीं देशसेवा भिन्ना। अधुना च भिन्ना।

सीमी मुक्तभावेन अहसत्। अन्धनयने तस्याः उल्लासः स्फुटः।

जितेन्द्रस्य मुखे अपि हर्षः स्फुरितः।

सीमीमाता उपस्थिता। उभयमुखे हास्यं विलोक्य सा सहर्षम् अवदत्।

– जितेन्........! अधुना समयः संजातः। गृहं याहि........ पुनः अपराह्णे आगन्तव्यम्।

जितेन्द्रः प्रत्यागच्छति। चिन्तयति, – शीतावकाशः निकटायते। तदा सर्वे बहिः भ्रमणार्थं गमिष्यन्ति। तदवसरे सीमी मया सह यास्यति। सावधानतया ताम् नेष्यामि। प्रयत्नेन च आनेष्यामि। सा नूनम् आनन्दम् अनुभविष्यति पुनः हसिष्यति। इदं कष्टं च विस्मरिष्यति।

सीमी क्रमशः स्वस्था अभवत्। गृहं च प्रत्यागतवती। एकस्मिन् प्रकोष्ठे उपविश्य केवलं परिचितानां स्वरं परिचिनोति। गृहे कनिष्ठभ्राता सहायः। बहिः क्रीडायां जितेन् सहायः। अन्यत्र जननी सहायिनी। कुत्र च प्रातिवेशिनः सहायिनः। तथापि तमः न अपसरति। रजनी न दिवायते। केवलम् अन्यस्य स्वरः प्रकाशयते।

क्रमशः दिवसाः व्यतीताः। सीमीजितेन्द्रयोः संपर्कः अधिकतरं वर्धितः। पिता यत् किमपि आनयति तत् सर्वम् उभयोः अर्धम् अर्धम्। एकदा जितेन्द्रः काष्ठैः आधुनिकरीत्या निर्मितं गृहम् आनीय उपस्थितः।

– सीमि........! अद्य पित्रा सह विपणीं गतवान्। विपणीतः इदं गृहं क्रीतवान् अस्मि।

- गृहम्........? कीदृशम्?

– अतीव मनोहरम्। इदं प्रदीपैः सुसज्जितम्। अतः सदा आलोकमयम्। अत्र च नक्तं दिवं समानम्।

– रात्रिः केन प्रकारेण दिवसेन सह समाना भविष्यति। तत्र तमसा। अत्र तु प्रकाशः।

(अनुवर्तिष्यते)

- न जानासि ? विज्ञानस्य इदं महत्त्वम्।
- किम् ?
- त्वं तु जानासि, जनाः चन्द्रपृष्ठं गताः।

तत्र नीरवसमुद्रं वर्तते। तत्र पुनः यदा सूर्यस्य रश्मिः प्रतिफलति तदा पृथिवीपृष्ठे रात्रिः आलोकिता भवति। ज्योत्स्नामयी रजनी नितराम् उपभोग्या भवति। अतः वैज्ञानिकाः चिन्तयन्ति।

- किं चिन्तयन्ति ?
- केन प्रकारेण सर्वदा चन्द्रालोकः पृथिव्यां पतिष्यति।
- तत् कथं सम्भवेत् ?
- ते कथयन्ति, यदि विशालदर्पणं चन्द्रपृष्ठोपरि स्थाप्येत तर्हि तत्र सूर्यस्य प्रतिफलनं भविष्यति। प्रतिफलितरश्मिः पृथिवीतः रात्रिं दूरीकरिष्यति। सीमी सानन्दम् अहसत्।

शीतावकाशः समीपवर्ती। सीमी उत्सुका। जितेन्द्रः प्रसन्नः। सः सर्वदा सीमीसमीपम् आगत्य भ्रमणवार्तां करोति। कुत्र गन्तव्यम् ? कुत्र वा अवकाशनिवासः कर्तव्यः ? स्थानं तत् कीदृशम् ? उष्णं वा शीतोष्णं वा ? पार्वत्यप्रदेशो वा तीर्थस्थानं वा ? अथवा-शिल्पनगरी ? किं वा तत्र दर्शनीयं वस्तु ? इत्थं विभिन्नरीत्या भाषते जितेन्द्रः।

मानवजीवनं न केवलं कतिपयदिनस्य मासस्य वर्षस्य वा कथा। अपि तु एषु यत् महत्त्वपूर्णं तदेव लिपिबद्धं भवति। महत्वे कारणं सदुपयोगः। अत दिनस्य मासस्य वर्षस्य च सदुपयोगः अपेक्षते। सदुपयोगेन जनः सुखी भवति। तथापि जीवनपथे बहवः विघ्नाः आगच्छन्ति। ईप्सितं न फलति। प्रियवस्तु दूरायते। अप्रियं समागच्छति। प्रियस्य विरहः अप्रियस्य च समागमः संसारेऽस्मिन् दुःखम्। दुःखस्य सहनम् अपेक्षते। प्रतिकाराय साहसः आवश्यकः। अतः धैर्यः संचयनीयः।

जितेन्द्रः विद्यालयात् प्रत्यागतः। अद्य किं तु गृहे किमपि अप्रीतिकरम् अनुभवति। पिता व्यस्तः। माता च इतस्ततो भवति। पूर्ववत् रुस्नेहं न पृच्छति। विरक्ता च प्रतीयते। असम्बद्धं जल्पति। पिता व्यग्रभावेन जल्पति।

– किं वा कर्तव्यम्? सर्वकारनिर्देशः अलंघनीयः। अधुना असमयः। तथापि आदेशः पालनीय एव।

जितेन्द्रः शान्तः संजातः। पितरम् उपगतः। धीरभावेन अपृच्छत्।

– पितः किम् अभवत् अद्य?

पिता तु विरक्त आसीत्। सः उदासीनभावेन अवदत्।

– याहि। निजकर्म समापय।

जितेन्द्रः तथापि शान्तः। मातरम् उपगतः।

– मातः! किमर्थं पिता विरक्तः।

विरक्ताऽपि जननी शान्तिस्वरूपिणी। सा सधैर्यं अभाषत।

– पितुः सेवावृत्तेः स्थानान्तरं संजातम्। अतः इदं स्थानं परित्यक्तव्यम्। अन्यत्र च गन्तव्यम्।

जितेन्द्रः नीरवः संजातः। मनसा तु खिन्नः। सः सीमीसमीपं प्रस्थितः। अपराह्णम् अवनम्यते।

सीमी पूर्ववत् यथास्थानम् आसीना। जितेन्द्रः विषादभरकण्ठेन अवदत्।

– सीमि ........! अस्माभिः अन्यत्र गन्तव्यम्।

– किमर्थम्?

– मम पितुः सेवावृत्तेः स्थानान्तरं संजातम् सीमीमुखं सहसा म्लानम् अभवत्।

दुःखेन सा अपृच्छत्।

– कदा गम्यते?

– अस्मिन् शीतावकाशे।

- जितेन् ................ ! !

सीमीनयनं सजलम् अभवत्। कृष्ण जलदतः यथा शुभ्रवृष्टिः निर्झरति तथैव सीमीनेत्रतः अश्रुधारा विगलिता।

अद्य सुप्रस्थानदिवसः। जितेन्द्रस्य परिवारकृते प्रातिवेशिभिः सौप्रस्थानिकं व्याहृतम्। सीमी निजमात्रा सह आगतवती। सा एकं पुष्पगुच्छं जितेन्द्रकरे समर्पितवती। तस्याः अन्धनयने अश्रु उच्छलम्। सा किमपि वक्तुं समर्था नासीत्।

जितेन्द्रः अश्रु अपसारयन् बोधितवान्।

- सीमि ........। एकदा नूनं मिलिष्यामः।

रेलस्थानम् जनपूर्णम्। कोलाहले कस्यापि वचनं न श्रूयते। केवलं रेलसमयघोषिकायाः स्वरः श्रुतिगोचरः। अन्ये आलापमग्नाः। स्थानमिदं स्नेहसम्मेलनाय श्रीक्षेत्रम्। अत्रैव बन्धुमिलनम्। अत्र च बन्धुविरहः। अत्र पुण्यपापयोः गणना नास्ति। भेदाभेदयोः विचारो नास्ति। अत्र सावधानता निजस्वमर्यादा। साहाय्यं हितैषणा। मैत्री शुभकरी। सहयात्री एव बन्धुः। सहयात्रा संप्रीतिः। भ्रातृभावः च स्नेहशैली।

सपरिवारः जितेन्द्रः अद्य अस्मिन् स्थाने प्रतीक्षमाणः। सपरिवारा सीमी निकटे दण्डायमाना। सीमीजितेन्द्रयोः आलापे केवलम् अतीतम्। उभयस्य नेत्रे अश्रु। कण्ठे च बाष्पम्।

रेलस्य लघुवातायनम् उन्मुक्तम्। अन्तः उपविष्टः जितेन्। बहिःस्था सीमी। उभयस्य करस्पर्शे अतीत संपर्कः श्रीमान्।

रेलतः हरित्पताका प्रसारिता। जितेन् सीमीहस्तं परित्यक्तवान्। रेलः चलितः। जितेन्द्रस्य करे सुप्रस्थानमुद्रा। व्याकुला सीमी न तस्य हस्तं न वा रेलपाताकां द्रष्टुं शक्नोति। तथापि जितेनस्य कृते मनसि तस्याः शुभेच्छा ........ मङ्गलकामना ........।

तदनु सीमीश्रवणे केवलं रेलस्य घर्घरशब्दः। नयनाग्रे च तथापि तमसा ............।